173

Digitized by Arya Samaj Foundation Chennai and eGangotri

# बाल-नाटकम्

( संस्कृत के कतिपय सांस्कृतिक एवं मनोरंजक लघु-लघु
सम्वाद तथा एकाङ्की नाटक )

## प्रथम-भागः




सार्वभौम संस्कृत प्रचार कार्यालय

वा रा ण सी

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

संस्कृत-संस्कृति के परम भक्त

**श्री रोशन लाल शर्मा**

( डाइरेक्टर )

अछरूराम कालखोफ एन्ड को० ( शैलाक )

मुड्हू, रांची ( बिहार )

की

सहायता से प्रकाशित

CC-0.Panini Kanya Maha Vidyalaya Collection.

कृत प्रचार पुस्तक माला सं० ३२

Digitized by Arya Samaj Foundation Chennai and eGangotri

# बाल-नाटकम्

( संस्कृत के कतिपय सांस्कृतिक एवं मनोरंजक लघु-लघु सम्वाद तथा एकाङ्की नाटक )

## प्रथम-भागः

पुण्यश्लोक भक्त

लेखकः
वासुदेव द्विवेदी शास्त्री
( संस्कृतप्रचार—पुस्तकमाला—सम्पादकः )



सार्वभौम संस्कृत प्रचार कार्यालय
वा रा ण सी

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# दो शब्द

संस्कृत प्रचार की दृष्टि से कार्यालय द्वारा ऐसे अनेक एकांकी नाटकों तथा संवादों के प्रकाशन का आयोजन किया गया है जिसकी सरस-सुबोध भाषा हो तथा जो अल्प पात्रों द्वारा अल्प समय में ही प्रदर्शित किये जा सकें। तदनुसार "कौत्सस्य गुरुदक्षिणा" तथा "भोजराज्ये संस्कृतसाम्राज्यम्' नामक दो मनोहर एकांकी नाटक प्रकाशित हो चुके हैं जिनका संस्कृत पाठशालाओं तथा स्कूल-कालेजों द्वारा सफल अभिनय किया जा चुका है और जो भाषा तथा कथावस्तु की दृष्टि से बहुत ही जनप्रिय प्रमाणित हुए हैं।

प्रस्तुत पुस्तक में सम्प्रति इसी प्रकार के छोटे-छोटे दस नाटक प्रकाशित किये जा रहे है। इनमें से प्रथम तो गीता का श्रीकृष्णार्जुनसंवाद ही है जो अभिनय के रूप में प्रस्तुत किया जायगा और शेष आठ छोटे बड़े एकाङ्की है। इन नाटकों के कथाभाग तथा श्लोक सभी प्राचीन ग्रंथों से लिये गये हैं जिसका उल्लेख अग्रिम पृष्ठ पर कर दिया गया है। गुण-दोष की दृष्टि से यह प्रयास कहाँ तक सफल या विफल है इसका निर्णय तो पाठकों तथा अभिनेताओं को करना है पर यदि छोटी बड़ी समस्त शिक्षासंस्थाओं द्वारा समय-समय पर इन दृश्यों के प्रदर्शन का आयोजन होता रहे तो संस्कृत तथा भारतीय संस्कृति के प्रचार की दिशा में बड़ी सहायता मिल सकती है यह निर्विवाद सत्य है।

अतएव समस्त संस्कृत पाठशालाओं तथा स्कूल-कालेजों के संस्कृताध्यापकों तथा संस्कृत-छात्रों से हमारी विनम्र प्रार्थना है कि वे अपनी संस्थाओं में पूर्व प्रकाशित तथा इन नव प्रकाशित नाटकों के अभिनय का आयोजन कर मनोरंजन

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

तथा ज्ञानवर्धन के साथ संस्कृत के प्रचार में सहायता करने की कृपा करें। जो लोग दृश्यों के बीच-बीच में गान तथा प्रहसन को भी सम्मिलित करना चाहें वे कार्यालय द्वारा प्रकाशित "संस्कृत गान माला" तथा "संस्कृत प्रहसनम्" नामक पुस्तकें मँगाकर इनसे उपयुक्त सामग्री लेने का कष्ट करेंगे। यह हमारी प्रार्थना कन्याविद्यालयों की अध्यापिकाओं तथा छात्राओं से विशेष रूप से है।

श्रीकृष्णजन्माष्टमी — विनीत

२०३८ वि० — लेखक



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# नाटक—सूची

## ( आधार ग्रन्थों के निर्देश के साथ )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# १—श्रीकृष्णार्जुनीयम्

## स्थानम्-युद्धस्थलम्

युद्धे आत्मनः एव गुरुजनानां बन्धुबान्धवानां च वधे पापाशंकया
आकुलचेतसः कम्पमानस्य च अर्जुनस्य श्रीकृष्णं प्रति
युद्धपरित्यागाय निवेदनम् ।

अर्जुनः—दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥
गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥
निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥
आचार्याः पितरः पुत्राः तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ॥
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥
अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद् राज्यसुख—लोभेन हन्तुं स्वजनमुद्यताः ॥
यदि मामप्रतीकारम् अशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस् तन्मे क्षेमतरं भवेत् ॥

श्रीकृष्णः—अहो आश्चर्यम् आश्चर्यम् !
कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यम् अकीर्तिकरमर्जुन ॥
क्लैव्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥

अर्जुनः—आर्य ! नहि मे किञ्चिदपि क्लैव्यं हृदयदौर्बल्यं वा वर्तते, परन्तु भवान् एव कथयतु—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥
न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम—
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥
कार्पण्य - दोषोपहत - स्वभावः
पृच्छामि त्वां धर्मसम्मूढचेताः।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥

श्रीकृष्णः—धनञ्जय ! विपरीतं विचारयसि।
अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
परन्तु—गतासून् अगतासूंश्च नानुशोचन्ति पण्डिताः ॥
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर् धीरस्तत्र न मुह्यति ॥
न जायते म्रियते वा कदाचि—
न्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥
अच्छेद्योऽयमदाह्योऽयम् अक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुः अचलोऽयं सनातनः ॥
अव्यक्तोऽयमचिन्त्योऽयम् अविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥

अथ च—क्षत्रियकुले प्रसूतोऽसि धनञ्जय । तस्मात्—

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥
कच्चिदेतत् श्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञान-संमोहः प्रनष्टस्ते धनञ्जय ॥

अर्जुनः—( बद्धाञ्जलिः भूत्वा )

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥
धन्योऽस्म्यनुगृहीतोऽस्मि कृतकृत्योऽस्मि केशव ।
यत्त्वया ज्ञानदीपेन मम मार्गः प्रदर्शितः ॥

श्रीकृष्णः—तर्हि अलमत्र विलम्बितेन । गाण्डीवं गृहाण । युद्धाय च त्वरितमेव सज्जो भव । ( अर्जुनः गाण्डीवं गृह्णाति ) ।

उभौ निर्गच्छतः ।

पटाक्षेपः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# १—भीष्म-प्रतिज्ञा

## प्रथमं दृश्यम्

### स्थानं राज-भवनम् ।

( उदासीनः चिन्तानिमग्नश्च देवव्रतः प्रविशति )

देवव्रतः—( स्वगतम् ) अहो, न जाने केन कारणेन अद्य मे पितृचरणाः चिन्ताकुला उदासीनाश्च विलोक्यन्ते । किं तेषां काचित् शारीरिकी पीड़ा अथवा किमपि मानसिकं कष्टं वर्तते । तत् अमात्यसमीपे गत्वा पितुः शोककारणं पृच्छामि । पितुश्चिन्ताया अपनयनं तस्य प्रसादनं च पुत्रस्य प्रधानं कर्तव्यं भवति ।

पिता स्वर्गः पिता धर्मः पिता हि परमं तपः ।
पितरि प्रीतिमापन्ने प्रीयन्ते सर्वदेवताः ॥
धिक् तं सुतं यः पितुरीप्सितार्थं क्षमोऽपि सन्न प्रतिपादयेद् यः ।
जातेन किं तेन सुतेन कामं पितुर्न चिन्तां हि समुद्धरेद् यः ॥

## द्वितीयं दृश्यम्

### स्थानम्—अमात्यभवनम् ।

अमात्यः—( आयान्तं भीष्मं दृष्ट्वा ) अहो, राजकुमारः देवव्रतः ! आगम्यताम्, अलंक्रियतामासनमिदम् । (देवव्रतः प्रणम्य उपविशति) राजकुमार ! कुतो नाम एतस्मिन् असमये अत्र आगमनं भवतः ?

देवव्रतः—अमात्यवर्याः ! अद्य किमपि नूतनं वृत्तं दृष्ट्वा विस्मितमानसः तत्समाधानाय भवत्समीपं समुपागतोऽस्मि ।

अमात्यः—( साश्चर्यम् ) तत् किमिति ?

देवव्रतः—विद्यमानेष्वपि समस्तेषु सुखसाधनेषु न जाने अद्य केन हेतुना मम पितृपादाः दुःखिताः चिन्ताकुलचेतसश्च प्रतीयन्ते । तदेतस्य कारणमहं ज्ञातुमिच्छामि, ज्ञात्वा च तस्य प्रतीकारं कर्तुमिच्छामि ।

अमात्यः—उचितमेवैतद् भवादृशामार्यपुत्राणाम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


देवव्रतः—तद् यदि भवन्तः एतस्य कारणं जानन्ति तर्हि तत्प्रकाशनेन अनुग्रहीतव्योऽस्मि ।

अमात्यः—राजकुमार ! बाढं जानामि । एतस्य कारणं तु आर्य पुत्र एवास्ति ।

देवव्रतः—( साश्चर्यम् ) अहमेव कारणम् ? हा धिक् । तत् कथमिव ? स्पष्टं निगद्यताम् ।

अमात्यः—राजकुमार ! एकस्मिन् दिने महाराजः सन्ध्याविहारवेलायां यमुनानदीतीरे परिभ्रमति स्म । तदानीं दूरादेव स्वशरीरसुगन्धेन निखिलमपि वनं सुवासयन्ती एका सत्यवती नाम्नी परमसुन्दरी धीवरराजकन्या तस्य अकस्मात् दृष्टिपथं गता । ततस्तस्या अद्भुतेन रूपेण विस्मयजनकेन सुगन्धेन च मुग्धो महाराजस्तया सह विवाहं कर्तुकामस्तस्याः पितरम् अयाचत ।

देवव्रतः—ततस्तेन किं कथितम् ?

अमात्यः—ततस्तेन कथितम्-महाराज ! ईदृशः सम्बन्धः कस्य अप्रियो भविष्यति परन्तु अहं भवता सह सत्यवत्याः तदैव विवाहं करिष्यामि यदा भवदनन्तरं अस्याः एव पुत्रो राजा भविष्यति इति "भवान् प्रतिज्ञां कुर्यात् ।"

देवव्रतः—ततो महाराजः किम् अवोचत् ?

अमात्यः—ततो महाराजः किमपि उत्तरं न दत्तवान् । ततश्च आगत्य "कथं ज्येष्ठं पुत्रं विहाय सत्यवतीसुताय राज्यं देयम् प्रतिज्ञाऽभावे च कथं सत्यवती लभ्यते ?" इत्येव अहर्निशं चिन्तयति । इदमेव तस्य चिन्ताया दुःखस्य च कारणं वर्तते ।

देवव्रतः—महामात्य ! यदि एतावन्मात्रमेव कारणं वर्तते तर्हि सर्वथा अकिञ्चित्करमेतत् । इदानीमेव अहं तस्य अपनयनाय उपायं करोमि ।

( प्रणम्य निष्क्रान्तः )

## तृतीयं दृश्यम्

( वने धीवरराजस्य समीपे देवव्रतस्य गमनं वार्ता च ।
धीवरः जालनिरीक्षण-परायणस्तिष्ठति )

धीवरः—( देवव्रतं दृष्ट्वा-स्वगतम् ) अहो तेजस्विता अस्य कुमारस्य !

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( प्रकटम् ) कुमार ! भवतः परिचयं आगमनकारणं च ज्ञातुमिच्छामि ।

देवव्रतः—दाशराज ! महाराजस्य शन्तनोः प्रियः पुत्रोऽहं देवव्रतनामा । इदश्च मम आगमनकारणम् । अस्ति काचिद् भवतो दुहिता सत्यवती नाम परमसुन्दरी ।

धीवरः—आम्, अस्ति एका ।

देवव्रतः—तया सह विवाहार्थम् अस्माकं तातपादाः चिन्ताकुलाः सन्ति । तद् भवान् सत्यवतीप्रदानेन महाराजं चिन्तामुक्तं करोतु इति निवेदनं कर्तुं अहं भवतः समीपमुपागतोऽस्मि ।

धीवरः—महाराजकुमार ! भवतः पितुश्चिन्ताया अपनयनस्य उपायस्तु भवतामेव हस्ते वर्तते ।

देवव्रतः—तत् कथमिव ?

धीवरः—यतो हि–महाराजशन्तनोः पश्चात् सत्यवतीपुत्र एव यदा राज्याधिकारी भविष्यति तदैव अहं तस्या महाराजेन सह विवाहं करिष्यामि इति मे प्रतिज्ञा अस्ति । भवन्तश्च महाराजस्य ज्येष्ठपुत्रा इति धर्मत एव राज्याधिकारिणः । तत् कथमहं सत्यवतीपुत्रस्य राज्यलाभं सम्भावयामि ? इयमेव सत्यवतीप्रदाने महती बाधा अस्ति ।

देवव्रतः—( सदार्ढ्यम् ) दाशराज ! इयं काचिद् बाधा नास्ति । भवतः प्रतिज्ञापूरणाय अहं बद्धपरिकरोऽस्मि । महाराजाऽनन्तरं सत्यवतीपुत्र एव राज्याधिकारी भविष्यति इत्यहं शतशः सर्वेषां पुरस्तात् उद्घोषयामि । तद् भवान् निर्भयो भूत्वा विवाहाय कृतनिश्चयो भवतु ।

धीवरः—सत्यमेतत् । नास्ति भवतः प्रतिज्ञायां मम सन्देहलेशोऽपि । परन्तु भवदनन्तरं यदि भवतः कश्चित् पुत्रो भवत्प्रतिज्ञाभङ्गं कुर्यात् तर्हि सत्यवतीपुत्रस्य का गतिः भविष्यति ?

देवव्रतः—अस्तु नाम, इममपि भवतो भयं सन्देहं च अहं निवारयामि । सत्यवतीसूनुरेव राज्याधिकारी भविष्यति इति पूर्वमेव प्रतिज्ञातं मया । तथापि यदि ते मनसि एतादृशी आशङ्का वर्तते तर्हि पुनरपि अहं भीषणं प्रणं करोमि यत् अहं कदापि विवाहं न करिष्यामि, आजीवनं च अखण्डितं ब्रह्मचर्यव्रतं धारयिष्यामि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

अद्य प्रभृति मे दाश ! ब्रह्मचर्यं भविष्यति ।
अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि ॥

अपि च—

परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः ।
यद्वाऽप्यधिकमेताभ्यां न तु सत्यं कदाचन ॥
त्यजेच्च पृथिवी गन्धम् आपश्च रसमात्मनः ।
ज्योतिस्तथा त्यजेद् रूपं वायुः स्पर्शगुणं त्यजेत् ॥
प्रभां समुत्सृजेदर्को धूमकेतुस्तथोष्मताम् ।
त्यजेत् शब्दं तथाऽकाशः सोमः शीतांशुतां त्यजेत् ॥
विक्रमं वृत्रहा जह्यात् धर्मं जह्याच्च धर्मराट् ।
न त्वहं सत्यमुत्स्रष्टुं व्यवस्येयं कथञ्चन ॥

( नेपथ्ये साधुवादः आकाशात् पुष्पवृष्टिश्च भवति )

धीवरः—( बद्धाञ्जलिः ) अहो राजकुमार ! धन्योऽसि, आदर्शपुत्रोऽसि । भवादृशैरेव पुत्रैः इयं भारतवसुन्धरा आत्मानं धन्यधन्यां मनुते । महानुभाव ! गम्यतामिदानीम् । अचिरादेव अहं महाराजस्य मनोरथं पूरयामि ।

पटाक्षेपः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ३—अभिमन्योः प्रयाणम्

## प्रथमं दृश्यम्

( शिविरे युधिष्ठिरो भीमसेनश्च अभिमन्युना सह मन्त्रयतः )

युधिष्ठिरः—( अभिमन्युं प्रति ) वत्स ! श्रुतं मया अद्य भगवता द्रोणाचार्येण आश्चर्यमयी अभेद्या व्यूहरचना कृता वर्तते । न च वयं चक्रव्यूहस्य भेदनरहस्यं जानीमः ।

त्वं वाऽर्जुनो वा कृष्णो वा भिन्द्यात् प्रद्युम्न एव वा ।
चक्रव्यूहं महाबाहो पञ्चमो नोपपद्यते ॥

अतस्त्वं क्षिप्रमेव व्यूहभेदनं विधाय आत्मनः सेनायाः समुद्धारं कुरु । अन्यथा अर्जुनः आगत्य अस्माकं महतीं गर्हणां करिष्यति ।

अभिमन्युः—महाराज ! अलमत्र चिन्तया !

द्रोणस्य दृढमत्युग्रम् अनीकप्रवरं युधि ।
पितृणां जयमाकाङ्क्षन् अवगाहेऽविलम्बितम् ॥

परन्तु पित्रा केवलं व्यूहे प्रवेश एव उपदिष्टो न तु विनिर्गमः । अतो यदि सङ्कटकालः समागच्छेत् तदा मया किं कर्तव्यम् ?

युधिष्ठिरः—अभिमन्यो ! न तस्य चिन्ता कर्तव्या ।

भिन्ध्यनीकं युधां श्रेष्ठ द्वारं सञ्जनयस्व नः ।
वयं त्वानुगमिष्यामो येन त्वं तात यास्यसि ॥

भीमसेनः—वत्स ! न वयं त्वाम् एकाकिनं परित्यजामः ।

अहं त्वाऽनुगमिष्यामि धृष्टद्युम्नोऽथ सात्यकिः ।
पाञ्चालाः केकया मत्स्यास्तथा सर्वे प्रभद्रकाः ॥
सकृद् भिन्नं त्वया व्यूहं तत्र तत्र पुनः पुनः ।
वयं प्रध्वंसयिष्यामो निघ्नमाना वरान् वरान् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

अभिमन्युः—महामान्याः ! यद्येवं तर्हि सत्वरमेव अहं चक्रव्यूहे प्रवेशाय प्रस्थानं करोमि ।

अहमेतत् प्रवेक्ष्यामि द्रोणानीकं दुरासदम् ।
पतङ्ग इव संक्रुद्धो ज्वलन्तं जातवेदसम् ॥
तत्कर्माद्य करिष्यामि हितं यद् वंशयोर्द्वयोः ।
मातुलस्य च यत् प्रीतिं करिष्यति पितुश्च मे ॥
शिशुनैकेन सग्रामे काल्यमानानि संघशः ।
द्रक्ष्यन्ति सर्वभूतानि द्विषत्सैन्यानि वै मया ॥
नाहं पार्थेन जातः स्यां न च जातः सुभद्रया ।
यदि मे संयुगे कश्चित् जीवितो नाद्य मुच्यते ॥
यदि चैकरथेनाहं समग्रं क्षत्रमण्डलम् ।
न कोरम्यष्टधा युद्धे न भवाम्यर्जुनात्मजः ॥

सारथे ! रथं सज्जीकुरु । ( युधिष्ठिरं भीमसेनं च प्रणमति )

युधिष्ठिरः—एवन्ते भाषमाणस्य बलं सौभद्र ! वर्धताम् ।
यत् समुत्सहसे भेत्तुं द्रोणानीकं दुरासदम् ॥

सारथिना सह विनिष्क्रान्तः ।

युधिष्ठिरः—भीमसेन ! इदानीं कथञ्चित् समाश्वसितं मे हृदयम् । परं वीरोऽपि, बालकः खलु अभिमन्युः । अतस्तस्य रक्षाकार्ये सर्वथा सावधानैर्भवितव्यमस्माभिः ।

भीमसेनः—अत्र कः सन्देहः ? तत् चलितव्यमेव यथाशीघ्रं महाराजेन ।

( उभौ विनिष्क्रान्तौ )

## द्वितीयं दृश्यम्

अभिमन्युः—सारथे ! महानेष कलकलः श्रूयते संग्रामभूमौ । तत् अविलम्बितमेव रथं सज्जीकुरु ।

सारथिः—परं युवराज ! निपुणं विचार्य युद्धस्थले अवतरणीयमार्येण ।

अभिमन्युः—कुतस्ते ईदृशो विकल्पः ?

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

सारथिः—अतिभारोऽयमायुष्मन् आहितस्त्वयि पाण्डवैः ।
संप्रधार्य क्षणं बुद्ध्या ततस्त्वं योद्धुमर्हसि ॥
आचार्यो हि कृती द्रोणः परमास्त्रे कृतश्रमः ।
अत्यन्त-सुख-संवृद्धस्त्वं चाऽयुद्ध-विशारदः ॥

अभिमन्युः—(विहस्य) अहो, मद्विषयेऽपि ईदृशो व्यामोहस्ते ! ।
सारथे ! कोन्वयं द्रोणः समग्रं क्षत्रमेव वा ।
ऐरावतगतं शक्रं सहामरगणैरहम् ॥
अथवा रुद्रमीशानं सर्वभूतगणार्चितम् ।
योधयेयं रणमुखे न मे क्षत्रेऽद्य विस्मयः ॥
न ममैतद् द्विषत्सैन्यं कलामर्हति षोडशीम् ।
अपि विश्वजितं विष्णुं मातुलं प्राप्य सूतज ॥
पितरं चार्जुनं युद्धे न भीर्मामुपयास्यति ।
तत् निर्भयो भूत्वा रथं रणक्षेत्रं प्रापय ।

( उभौ विनिष्क्रान्तौ )

पटाक्षेपः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ४—अश्वमेधस्य तुरगः

## स्थानम् महर्षिवाल्मीकेराश्रमः

( अश्वं दृष्ट्वा आश्चर्यचकिताः पंच वटवः प्रविशन्ति )

प्रथमः—अरे, अश्वः खलुः महान् विशालकायः जन्तुः अस्ति ।

द्वितीयः—अरे न केवलं विशालकायः, बलवान् अपि अस्ति ।

तृतीयः—कथं न । कियता वेगेन धावति ! वायुरिव उड्डीयते ! दूरादेव च एतस्य टप् टप् ध्वनिः श्रूयते !

चतुर्थः—आगच्छत, भ्रातरं लवमपि सूचमामः । सोऽपि प्रत्यक्षीकरोतु अश्वम् ।

पञ्चमः—अवश्यं सूचनीयम् । चलत, इदानीमेव सूचयामः ।

( सर्वे धावन्तो निर्गच्छन्ति )

( पृष्ठे तूणीरं वहन् धनुष्पाणिः लवः प्रविशति )

लवः—( सविस्मयं परितो विलोक्य कोलाहलश्रवणं च अभिनीय ) अहो अद्य तपोवने किमपि अदृष्टपूर्वमिव दृश्यं दृष्टिगोचरी भवति । परितः प्रसर्पता धूलिराशिना समाच्छन्नमिव समस्तं नभोमण्डलम् । आश्रमे च इतस्ततो धावतां वटूनां संत्रासमयः कलकलः ! तत् निपुणं निभालयामि । कीदृशं वृत्तमिदम् ?

( लवः समन्तात् सावधानतया दत्तदृष्टिः तिष्ठति । तावत् ससम्भ्रमं सर्वे वटवः प्रविशन्ति )

प्रथमः—(लवं प्रति सविस्मयम्) कुमार ! अश्वः अश्व इति कोऽपि पशु-समाम्नायिको जन्तुविशेषो जनपदेषु श्रूयते । सोऽयमधुना अस्माभिः प्रत्यक्षीकृतः ।

लवः—( सतर्कितम् ) अश्वः अश्व इति पशुसमाम्नाये संग्रामे च पठ्यते । तत् कथयत कीदृशः अस्ति ?

प्रथमः—श्रूयताम्-तस्य एकं विशालं पुच्छं वर्तते ।

द्वितीयः—तच्च निरन्तरं धुनाति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

तृतीयः—तस्य ग्रीवा च अतीव दीर्घा अस्ति। खुराश्च चत्वारः सन्ति।

लवः—अथ खादति किम् ?

चतुर्थः—घासं खादति, तथा आम्रसदृशीं विष्टां करोति।

पञ्चमः—अरे, किमधिकं वर्णनेन ! (हस्तं धृत्वा) एहि स्वयमेव प्रत्यक्षीकुरु। अन्यथा दूरं गमिष्यति।

( सर्वे हस्तं धृत्वा आकर्षन्ति )

वटवः—पश्यतु हि कुमारस्तदाश्चर्यम्।

लवः—दृष्टम् अवगतञ्च। नूनमयं खलु आश्मेधिकः अश्वः प्रतिभाति। तस्मात् महती सेना एतस्य पृष्ठानुगामिनी भविष्यति। तत् सावधानतया सर्वैः स्थातव्यम्।

वटवः—कथं ज्ञातते ?

लवः—अरे न पठितं युष्माभिस्तस्मिन् काण्डे ? किं न पश्यथ, प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारो दृश्यन्ते। यदि न विश्वासस्तर्हि गत्वा पृच्छत। ( वटवः निर्गच्छन्ति। )

वटवः—( नेपथ्ये ) भो भोः किमर्थमयं अश्वः सैनिकैः परिवृतः समन्तात् पर्यटति ?

लवः—(आत्मगतम्) अये अश्वमेध इति विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रियपरिभावी महान् उत्कर्षनिकषः।

( नेपथ्ये )

अयमश्वः पताकेयम् अथवा वीरघोषणा।
सप्तलोकैकवीरस्य दशकण्ठकुल–द्विषः।

लवः—( सव्यथमिव ) अहो सन्दीपनानि अक्षराणि इमानि। (प्रकाशम्) अरे किम् अक्षत्रिया पृथिवी ! यदेवम् उद्घोष्यते "सप्तलोकैकवीरस्य" इति।

( नेपथ्ये—अरे महाराजं प्रति कुतः क्षत्रियाः ? )

लवः—धिग् मूर्खान्, एतादृशः अभिमानः !

यदि ते सन्ति सन्त्येव केयमन्या विभीषिका।
किमुक्तैः शरसम्बाधां पताकां वो हराम्यहम्॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

भो भोः वटवः ! परिवृत्य लोष्टैरभिघ्नन्तो नयत आश्रमे अश्वम् । एष हरिणानां मध्ये वराकश्चरतु ।

( सक्रोधदर्पः पुरुषः प्रविशति )

पुरुषः—( लवं प्रति ) अरे चपल बालक ! किमुक्तवानसि ? न जानासि, कठोरहृदया हि सैनिकाः पुरुषाः शिशोरपि गर्वितां वाणीं न सहन्ते । राजपुत्र-श्चन्द्रकेतुश्च अपूर्वारण्यदर्शनेन कुतूहलाक्रान्तहृदयः । तदेते यावदत्र न आगच्छन्ति तावत् त्वरितमेव अपसर्पत अनेन तरुगहनेन मार्गेण ।

वटवः—( सभयम् ) कुमार ! किमनेन अश्वेन ? तर्जयन्ति हि इमे विस्फुरितशस्त्रास्त्रपाणयः सैनिकाः, दूरे च आश्रमस्थानम्, तदागच्छ हरिणप्लुतैः पलायामहे ।

लवः—अरे वटवः ! कथं भयभीता भवथ मयि विद्यमाने ! ममापि पराक्रमं पश्यन्तु । ( स्मितं कृत्वा ) यदि विस्फुरन्ति शस्त्राणि तर्हि ( धनुरारोपयन् )

ज्याजिह्वया बलयितोत्कट-कोटिदंष्ट्रम्
उद्गारि-घोर-घन-घर्घर-घोषमेतत् ।
ग्रास-प्रसक्त-हसदन्तक-वक्त्र-यन्त्र—
जृम्भा-विडम्बि-विकटोदरमस्तु चापम् ॥

आगच्छत, अद्य एकाकी एव सर्वानपि सैनिकान् यमसदनं प्रापयामि ।

( इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे )

## द्वितीयं दृश्यम्

नेपथ्ये महान् हाहाकारो भवति । ततश्च कश्चित् कथयति—भो भोः सैनिकाः । जातं जातममलम्बनम् अस्माकम् । मा पलायनं कुरुत ।

नन्वेष त्वरित-सुमन्त्र-नुद्यमान—
व्यावल्गत्-प्रजवन-वाजिना रथेन ।
उद्घात प्रचलित-कोविदार-केतुः
श्रुत्वा वः प्रधनमुपैति चन्द्रकेतुः ।

(ततः प्रविशति सुमन्त्रसारथिना सह धनुष्पाणिः साद्भुत-हर्ष-सम्भ्रमः चन्द्रकेतुः ।

चन्द्रकेतुः—( साश्चर्यम् ) आर्य सुमन्त्र ! पश्य—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

मुनिजन-शिशुरेकः वंसैन्यकायेसतः
नव इव रघुवंशस्याप्रसिद्धः प्ररोहः।
दलितकरिकपोल-ग्रन्थि-टङ्कार-घोर-
ज्वलित शर- सहस्रः कौतुकं मे करोति ॥

आश्चर्यम् आश्चर्यम् !

सुमन्त्रः—आयुष्मन् !

अतिशयित-सुरासुर-प्रभावं
शिशुमवलोक्य तवैव तुल्यरूपम्।
कुशिकसुत-मखद्विषां प्रमाथे
धृतधनुषं रघुनन्दनं स्मरामि ॥

चन्द्रकेतुः—आर्य ! अनेन एकेन सह अनेके सेनापतयः युद्धचन्ति इति लज्जते मे हृदयम्।

अयं हि शिशुरेककः समर-भार-भूरि स्फुरत्-
करालकरकन्दली – कलित-शस्त्रजालैर्वलैः।
क्वणत्-कनककिङ्किणी-झणझणायित-स्यन्दनै-
रमन्द-मद-दुर्दिन-द्विरद-वारिदैरावृतः ॥

सुमन्तः—वत्स ! एभिः समस्तैरपि एतस्य का क्षतिः, किं पुनर्व्यस्तैः ?

( नेपथ्ये महान् कोलाहलः श्रूयते )

चन्द्रकेतुः—आर्य ! श्रूयतां श्रूयताम्। मन्ये सर्वेषामपि सैनिकानां महत् कदनमारब्धम् अनेन शिशुना। तत् शीघ्रमेव चलितव्यं रणाङ्गणे सेना–संरक्षणाय

( उभौ अपि निष्क्रान्तौ )

पटाक्षेपः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ५—श्रीकृष्णस्य दधिचौर्यम्

## प्रथमं दृश्यम्

( एकस्मिन् गृहे काश्चन गोपिकाः शयानाः सन्ति । तत्र श्रीकृष्णः कतिपय-सहचरैः सह प्रविश्य तत्र स्थितेषु भाण्डेषु दधि अन्वेषयति । परं तेषु दधि न लभ्यते । ततः उपरि शिक्यस्थितं भाण्डं दृष्ट्वा तच्च युक्त्या अवतार्य सर्वे तूष्णीं दधि भक्षयन्ति । तच्च पात्रं मृत्तिकादिना प्रपूर्य पुनः शिक्ये स्थापयन्ति । तावदेव एका गोपिका जागर्ति, यावच्च धर्तुं धावति तावत् सर्वे इतस्ततो द्रुतं पलायन्ते । )

गोपी—( कुपिता भूत्वा ) आः, अनेन बालकेन वयं नितान्तं व्याकुलाः जाताः स्म । एकस्मिन् गेहे गत्वा क्षीरं पिबति । अन्यस्मिन् गेहे गत्वा दधि भक्षयति । अपरस्मिन् गेहे गत्वा नवनीतं गृह्णाति । अन्यस्मिन् गेहे गत्वा पायसं भुंक्ते । इतरस्मिन् गेहे गत्वा तक्रघटं प्रलोकते । कदाचित् शिक्यस्थितं भाण्डम् अवतारयति । अस्माकं गृहस्य पतिर्भवति !

द्वितीया—अस्य शिशोः धृष्टतायाः काचित् सीमा एव नास्ति । अस्तु, पुनः आगन्तव्यं त्वया ।

तृतीया—सख्यः । अलमिदानीं जल्पितेन वृथा जागरणेन च । श्वः प्रात-रेव यशोदायाः समीपे गत्वा सर्वमिदं निवेदनीयम् । आगच्छत शयामहे ।

( सर्वाः शेरते )

## द्वितीयं दृश्यम्

(एकस्मिन् परममनोहरे पर्यङ्के यशोदा विराजते । तत्र पंच गोपिकाः श्रीकृष्णं धृत्वा नयन्ति तस्य दधिचौर्यादिकं च तस्यै सभ्रूभङ्गं सोपालम्भं च निवेदयन्ति । )

प्रथमा—न शक्नुमो व्रजे स्थातुं तव पुत्रानयेन तु ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

दधीनि नवनीतानि पयांसि च मधूनि च ॥
भुंक्ते विभज्य बालेभ्यो मर्कटेभ्यो ददाति च ।
क्रोशयत्येव बालाँश्च पात्राण्यपि भिनत्ति च ॥
वत्सान् मुञ्चत्यकालेऽपि कुपिता नो हसत्यपि ।

द्वितीया—अपि च—
प्रविश्यान्तर्गृहं चौरः केनाऽपि ह्यविलक्षितः ।
सभाण्ड–पक्वान्नचयं गृहीत्वा चत्वरे स्थितः ॥
विभज्याऽश्नाति बालेभ्यः श्वमार्जारेभ्य एव च ।
भाण्डभेदं ततः कृत्वा भाण्डखण्डाननेकशः ।
क्रोशन्तीनां तदास्माकं सम्मुखं प्रक्षिपत्यसौ ॥

तृतीया—अरे न केवलं एतावदेव—
ततः कर्दमपूर्णानि भाण्डानि च विधाय वै ।
आरोप्य शिक्येषु पुनर्यथापूर्वं तवात्मजः ॥
वञ्चयित्वा च नश्यत्यक्षुर्यथा यात्यैन्द्रजालिकः ॥

चतुर्थी— एवंविधान्यनेकानि चेष्टितानि तवात्मजः ।
कुरुते कं प्रति ब्रूमो भवती न शृणोति चेत् ॥

यशोदा—( पञ्चमीं प्रति ) तवापि किञ्चित् निवेदनीयं वर्तते ?

पञ्चमी— यशोदे ! किं किमहो कथयामः ।
कथं वा कथय वयं निवसामः ॥

वद वदेति बहु वदसि यशोदे ! कथने किन्तु त्रपामः ।
एत्य करोति कुकृत्यं किं किं स्मरसि कदापि नु श्यामः ।

गतिं कां नाऽनुभवामः ।
कथं वा कथय वयं निवसामः ॥

गायति कियदश्लील–गायनं यत्र यत्र गच्छामः ।
मिलति यदा पथि क्षिपति घटं मे श्लिष्यति हसति सकामः ॥'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

कथं अबला जीवामः ।

कथय कथं निवसामः ॥

यशोदा—कृष्ण ! कथं ते ईदृशं विचेष्टितम् ? अयमेव ते कुलोचितो व्यवहारः ?

श्रीकृष्णः—( साक्षेपम् ) इदं सर्वमपि सर्वथा असत्यं वर्तते मातः !

मम दोषं बिनैवैता अलीकवचसोऽवलाः ।
प्रत्यहं भवतीमेत्य मां ताडयितुमुद्यताः ॥
नैतासां वचनं मातर्मन्तव्यं ते कदाचन ।
परापराधान् मय्येव सर्वानारोपयन्ति याः ॥
अहं कस्या अपि गृहं न गच्छामि कदाचन ।
नयन्ति स्वगृहं ह्येता रमन्तं स्वगृहाङ्गणे ॥
गृहस्यान्तर्गृहं नीत्वा वञ्चनाभिरिमाः स्त्रियः ।
स्थापयित्वा करौ कण्ठे दृढमालिङ्गयन्ति माम् ॥
चुम्बन्ति मुखपद्मं मे प्रेरयन्ति तथैव माम् ।
नर्तयन्ति च मामेता दधि-दुग्धादि-लोभनैः ॥

अन्यच्च—गृहकार्याणि सततं कारयन्ति मया प्रभो ।
गृहकोणे स्थितं चेदं मुसलं त्वमिहानय ॥
आनयस्वोलूखलं च मानं सूर्पं च पादुकाम् ।
पीठं रज्जुं तथा चान्यद् आनेतुं मां दिशन्ति च ॥
ततः प्रसन्नाः किमपि खाद्यं मह्यं ददत्यपि ।
बालकेभ्यो विभज्याऽहं भुक्त्वा यामि यतस्ततः ॥
अतः परतरं किञ्चिद् बदन्ति व्रजयोषितः ।
अलीकमेव तत्सर्वं माननीयं त्वया प्रभो ॥

मातः ! त्वमेव तावद् विचारय—

किं नास्त्यस्मद्गृहे भूरि यत् परेभ्योऽहमर्थये ।
त्वद्दत्त-भक्ष्य-भोज्यादि-तृप्त एव चराम्यहम् ॥
न पुनर्भक्षणे श्रद्धा जायते मे कदाचन ।
यदि वा जायते मातस्त्वं कियद्दूरगासि भोः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

नन्दराजस्य पुत्रोऽहं भूत्वासां क्षुद्रयोषिताम् ।
गृहे गत्वार्थयामीति लज्जा मे जायते न किम् ? ॥

प्रथमा—अहो चौरस्य गर्जनम् ।

द्वितीया—अनेन तु स्ववाक्चातुर्येण पाश एव परिवर्तितः ।

तृतीया—अरे ! शरीरेणैव बालकः अस्ति बुद्धया तु वृद्ध इव प्रतिभाति ।

( श्रीकृष्णः भयं नाटयति अश्रूणि च मार्जयति )

यशोदा—( श्रीकृष्णम् अङ्के गृहीत्वा कोपं प्रदर्शयन्ती ) गोप्यः यूयं वृथैव दोषारोपणं कुरुथ मम निरपराधे बाले । गच्छत इतः । अहं कस्यापि वचनं न श्रोष्यामि ।

पटाक्षेपः ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ६—अर्जुनस्य जितेन्द्रियता

## प्रथमं दृश्यम्

( अर्जुन इन्द्रस्य अतिथिशालायां निशीथकाले परममनोहरे तल्पे शयानस्तिष्ठति। तावत् उर्वशी भवनं प्रविश्य अर्जुनं जागरयितुं तदुपरि पुष्पमालां वारद्वयं प्रक्षिपति। )

अर्जुनः—( उत्थाय ) स्वागतं महाभागायाः।
अभिवादये त्वां शिरसा प्रवराप्सरसां वरे।
किमाज्ञापयसे देवि प्रेष्यस्तेऽहमुपागतः॥

उर्वशी—उपस्थाने महेन्द्रस्य वर्तमाने मनोरमे।
तवागमनतो वृत्ते स्वर्गस्य परमोत्सवे॥
वीणासु वाद्यमानासु गन्धर्वैः शक्रनन्दन।
दिव्ये मनोरमे गेये प्रवृत्ते पृथुलोचन॥
सर्वाप्सरःसु मुख्यासु प्रनृत्तासु कुरूद्वह।
त्वं किलानिमिषः पार्थ मामेकां तत्र दृष्टवान्॥
ततः—
त्वद्गुणाकृष्टचित्ताहम् अनङ्गवशमागता।
चिराभिलषितो वीर ममाप्येष मनोरथः॥

अर्जुनः—( कर्णौ पिधाय सङ्कुचितमनाश्च भूत्वा )
दुःश्रुतं मेऽस्तु सुभगे ! यन्मां वदसि भामिनी।
गुरुदारैः समाना मे निश्चयेन वरानने॥
यथा कुन्ती महाभागा यथेन्द्राणी शची मम।
तथा त्वमपि कल्याणी नात्र कार्या विचारणा॥
यच्चेक्षितासि विस्पष्टं विशेषेण मया शुभे।
तच्च कारणंपूर्वं हि शृणु सत्यं शुचिस्मिते॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

इयं पौरववंशस्य जननी मुदितेति ह।
त्वामहं दृष्टवांस्तत्र विज्ञायोत्फुल्ललोचनः ॥
न मामर्हसि कल्याणि अन्यथा ध्यातुमप्सरः।
गुरोर्गुरुतरा मे त्वं मम त्वं वंशवर्धिनी ॥

**उर्वशी**—सत्यमिदं, परन्तु न तथा चिन्तनीयं मद्विषये। यतो हि—

अनावृताश्च सर्वाःस्म देवराजाभिनन्दन।
गुरुस्थाने न मां वीर नियोक्तुं त्वमिहार्हसि ॥
पुरोर्वंशे हि ये पुत्रा नप्तारो वा त्विहागताः।
तपसा रमयन्त्यस्मान्न च तेषां व्यतिक्रमः ॥
तत्प्रसीद न मामार्तां विसर्जयितुमर्हसि।
हृच्छयेन च संतप्तां भक्तां च भज मानद ॥

**अर्जुनः**—शृणु सत्यं वरारोहे यत्त्वां वक्ष्याम्यनिन्दिते।
शृण्वन्तु मे दिशश्चैव विदिशश्च सदेवताः ॥
यथा कुन्ती च माद्री च शची चैव ममानघे।
तथा च वंशजननी त्वं हि मेऽद्य गरीयसी ॥
गच्छ मूर्ध्ना प्रपन्नोऽस्मि पादौ ते वरवर्णिनि।
त्वं हि मे मातृवत् पूज्या रक्ष्योऽहं पुत्रवत् त्वया ॥

**उर्वशी**—( कुपिता भूत्वा )

तव पित्राऽभ्यनुज्ञातां स्वयं च गृहमागताम्।
यस्मान्मां नाभिनन्देथाः कामबाणवशंगताम् ॥
तस्मात्त्वं नर्तनः पार्थ स्त्रीमध्ये मानवर्जितः।
अपुमानिति विख्यातः षण्ढवद् विचरिष्यसि ॥

( निष्क्रान्ता )

## द्वितीयं दृश्यम्

( चित्रसेनेन सह अर्जुनस्य इन्द्रसभायां प्रवेशः )

**इन्द्रः**—स्वागतं धनुर्धरधौरेयाय धनञ्जयाय। आयुष्मन् ! इदमासनम् अलङ्क्रियताम्। ( चित्रसेनं प्रति ) चित्रसेन ! किमपि निवेदनीयं वर्तते

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

त्रसेनः—देवाधिदेव ! असाधारणं वृत्तं निवेदनीयं वर्तते ।

न्द्रः—असाधारणम् ? किं नाम तद् वृत्तम् ?

त्रसेनः—महाराज ! तस्मिन् दिने राजसभायां नृत्योत्सवे अर्जुनस्य वारं वारमवलोकनेन आत्मनि एनं आसक्तमानसं मत्वा मुग्धाशया उर्वशी समागमेच्छया रात्रौ एतस्य समीपे गतवती अस्ति । ( अर्जुनः सङ्कोचं नाटयति )

न्द्रः—एवं खलु ? ततस्ततः ?

त्रसेनः—ततस्तया वारं वारं विधीयमानेऽपि अनुनये महानुभावोऽयं "त्वं मम मातृवत् पूजनीयासि । गच्छ मातः, पुनः पुनः पादयोः प्रणतोऽस्मि । नहि माम् आर्यजनोचितात् पथः पातयितुमर्हसि" इत्यादि वचनैः तां परावर्तनाय अनेकशः प्राथितवान् । ततः सा एनं "नर्तनो भविष्यसि पुंस्त्वहीनः" इति शापं दत्वा गृहं परावृत्ता ।

न्द्रः—( सहर्षम् ) साधु साधु ! सहस्रशो धन्यवादार्होऽसि । वीरवर ! "मातृवत् परदारेषु" इति अस्माकं सनातनी आर्यमर्य्यादा अस्ति । परन्तु अप्सरस्सु अपि मातृबुद्धि रक्षता त्वया ततोऽपि उत्कृष्टतमा मर्यादा संस्थापिता । ईदृशा एव आदर्शचरित्रा युवानो मानवसमाजस्य शिरोभूषणानि भवन्ति । ( उत्थाय परिष्वज्य च )

सुपुत्राऽद्य पृथा तात त्वया पुत्रेण सत्तम ।
ऋषयोऽपि हि धैर्येण जिता वै ते महाभुज !

अथ च—

यत्तु दत्तवती शापम् उर्वशी तव मानद ।
स चापि तेऽर्थकृत्तात साधकश्च भविष्यति ॥

( अर्जुनः सविनयं प्रणमति सभासदश्च तदुपरि पुष्पवृष्टिं कुर्वन्ति )

( नेपथ्ये )

इदममरवरात्मजस्य घोरं
शुचि चरितं विनिशम्य फाल्गुनस्य ।
व्यपगत-मद-दम्भ-राग-दोषाः
त्रिदिवगता विरमन्ति मानवेन्द्राः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ७—आत्रेयी-वनदेवता-संवादः

## स्थानम्—वनम् ।

( आत्रेयी वनदेवता च प्रविशतः )

**वनदेवता**—स्वागतं तपोधनायाः ।

**आत्रेयी**—अये ! वनदेवता इयं फल-कुसुम-पल्लवार्घ्येण मामुपतिष्ठते ।

**वनदेवता**—( अर्घ्यं विकीर्य )

यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
तरुच्छाया तोयं यदपि तपसो योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥

**आत्रेयी**—किमत्र उच्यते ?

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥

**वनदेवता**—कां पुनरत्रभवतीम् अवगच्छामि ?

**आत्रेयी**—आत्रेयी अस्मि ।

**वनदेवता**—आत्रेयी ! कुतः पुनरिहागम्यते ? किं प्रयोजनं वा दण्डकारण्य प्रवेशे ?

**आत्रेयी**—अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्यटामि ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


वनदेवता—यदि तावद् अन्येऽपि मुनयः तमेव हि पुराणं ब्रह्मवादिनं प्राचेतस—मृषिं ब्रह्मपारायणाय उपासते, तत् कोऽयमत्र आर्य्याया दीर्घप्रवास—प्रयासः ?

आत्रेयी—तत्र महान् अध्ययनप्रत्यूह इति दीर्घप्रवासः अङ्गीकृतः।

वनदेवता—कीदृशः प्रत्यूहः ?

आत्रेयी—तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं, स्तन्यत्याग—मात्रके वयसि वर्तमानं, दारकद्वयम् उपनीतम्। तत् खलु न केव—लम् ऋषीणाम् अपितु सचराचराणां भूतानाम् आन्तराणि तत्त्वानि उपस्नेहयति।

वनदेवता—अपि तयोः नामसंविज्ञानम् अस्ति ?

आत्रेयी—तयैव किल देवतया तयोः कुशलवौ इति नामनी प्रभावश्च आख्यातः।

वनदेवता—कीदृशः प्रभावः।

आत्रेयी—तयोः किल सरहस्य-जृम्भकास्त्राणि आजन्मसिद्धानि इति।

वनदेवता—अहो नु भोः चित्रमेतत्।

आत्रेयी—तौ च भगवता वाल्मीकिना धात्रीकर्म-वत्सलतां परिगृह्य पोषितौ परिरक्षितौ च। वृत्तचौड़कर्म्मणोश्च तयोः त्रयीवर्जमितरा विद्याः सावधानेन परिनिष्ठापिताः। समनन्तरं च गर्भैकादशे वर्षे क्षत्रेण कल्पेन उपनीय तौ त्रयीविद्याम् अध्यापितौ। नहि एताभ्याम् अतिप्रदीप्तप्रज्ञाभ्याम् अस्मदादेः सहाऽध्ययनयोगोऽस्ति।

यतः—

वितरति गुरुः प्राज्ञे विद्यां यथैव, तथा जड़े
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।
भवति च पुनर्भूयान् भेदः फलं प्रति तद् यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः ॥

वनदेवता—अयमसौ अध्ययनप्रत्यूहः।

आत्रेयी—अपरश्च।

वनदेवता—अथ अपरः कः ?

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

आत्रेयी—अथ स ब्रह्मर्षिरेकदा मध्यन्दिनसमये नदीं तमसामनुप्रपन्नः । तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन विध्यमानं ददर्श । आकस्मिकप्रत्यवभासाच्च दैवीं वाचमानुष्टुभेन छन्दसा परिणतामभ्युदैरयत् ।

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकम् अवधीः काममोहितम् ॥ इति

वनदेवता—चित्रम् ! आम्नायादन्योऽयं नूतनश्छन्दसामवतारः ।

आत्रेयी—तेन खलु पुनः समयेन तं भगवन्तम् आविर्भूत-शब्दब्रह्मप्रकाशम् ऋषिम् उपसंगम्य भगवान् भूतभावनः पद्मयोनिः अवोचत्, "ऋषे ! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि, तद् ब्रूहि रामचरितम्, अव्याहतज्योतिरार्षं ते चक्षुः प्रतिभातु, आद्यः कविरसि" इत्युक्त्वाऽन्तर्हितः । अथ भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय ।

वनदेवता—हन्त ! तर्हि पण्डितः संसारः ।

आत्रेयी—तस्माद् अवोचम्, तत्र महान् अध्ययनप्रत्यूहः ।

वनदेवता—युज्यते ।

आत्रेयी—विश्रान्तास्मि भद्रे ! सम्प्रति अगस्त्याश्रमस्य पन्थानं ब्रूहि ।

वनदेवता—इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ।

( उभे प्रणम्य निष्क्रान्ते )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ८—यक्ष-सन्देशः

## ( मेघदूतस्य अभिनयात्मकं दृश्यम् )

( स्थानम्—राजप्रासादः । कन्दर्पकेतोः
प्रमादेन कुपितो यक्षाधिपतिः
मन्त्रिद्वयेन सह तिष्ठति )

यक्षाधिपतिः—( द्वारपालं प्रति ) विश्वावसो ! कन्दर्पकेतुं द्रष्टुमिच्छामि । तत् यथाशीघ्रं प्रवेशय एनम् ।

विश्वावसुः—यथा आदेशो महाराजानाम् ।

यक्षाधिपतिः—( मन्त्रिणं प्रति ) महामात्य ! श्रुतं मया नवनियुक्तेषु कर्मचारिषु महान् एष प्रमादी कन्दर्पकेतुः । तदद्य तं यथोचितेन दण्डेन योजयितुमिच्छामि । किमत्र सम्मतं भवताम् ?

एकः मन्त्री—महाराज ! किमत्र सम्मतिग्रहणस्य प्रयोजनम् ? दण्डनीया एव प्रमादोपेताः कर्मचारिणः ।

द्वितीयः मन्त्री—अन्यच्च–प्रमादस्य उपेक्षायां महती कार्यहानिः स्यात् । कर्मचारिवर्गश्च पुनः निर्भयो भूत्वा यथेच्छं कार्याणि विदधीत ।

यक्षाधिपतिः—अत एव ममायं दण्डदानस्य निश्चयः ।

कन्दर्पकेतुः—( प्रविश्य ) प्रणतिराजयो महाराजानां चरणसरोजयुगलेषु ।

यक्षाधिपतिः—कन्दर्पकेतो ! अपि सम्पादितानि गतदिनस्य सर्वाणि कार्याणि ?

कन्दर्पकेतुः—( साशङ्कम् ) सर्वाणि सम्पादितानि ।

यक्षाधिपतिः—सर्वाणि सम्पादितानि । न किञ्चिदवशिष्टम् ।

कन्दर्पकेतुः—( सभयम् ) कानिचित् अवशिष्टान्यपि ।

यक्षाधिपतिः—कथम् अवशिष्टानि ? कार्याधिक्यात् ?

कन्दर्पकेतुः—प्रभो ! न कार्याधिक्यात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

यक्षाधिपतिः—तर्हि ?

कन्दर्पकेतुः—ममैव विलम्बेन उपस्थानात् ।

यक्षाधिपतिः—विलम्बेन उपस्थानात् । कथं तर्हि विलम्बेन उपस्थितिः ?

कन्दर्पकेतुः—( भयं व्रीडां च नाटयति )

यक्षाधिपतिः—विलम्बस्य कारणं कथय। किम् अस्वास्थ्यवशात् बिलम्बेन उपस्थितिः ?

कन्दर्पकेतुः—( अञ्जलिं बध्नन् ) नहि ।

यक्षाधिपतिः—किं तर्हि अतिथिसमागमात् ?

कन्दर्पकेतुः—नैव ।

यक्षाधिपतिः—किं काचित् दुर्घटना संवृत्ता ?

कन्दर्पकेतुः—न काचित् दुर्घटना संवृत्ता ।

यक्षाधिपतिः—तर्हि सत्यं सत्यं निरूपय। किं ते विलम्बस्य कारणम् । न केवलं गतदिने, प्रतिदिनं विलम्बेन उपस्थितिर्भवति ।

मन्त्री—निस्सङ्कोचं निवेदय, यदत्र कारणं वर्तेत ।

कन्दर्पकेतुः—महाराजाः ! क्षणिकमपि प्रियतमा सहवास-सुख-विच्छेदम् असहनामस्य मे अद्य विलम्बेन उपस्थितिर्जाता । तत्क्षन्तव्योऽयं मेऽपराधः । ( शिरो नमयति । ) ।

यक्षाधिपतिः—( मन्त्रिणों प्रति ) श्रुतं भवद्भ्यां विलम्बस्य कारणम् ? अहो ! प्रियतमा-सहवास-विच्छेद-भयात् राजकीयकार्येषु एतावान् प्रमादः । एतादृशी असावधानता ! तर्हि विनष्टः सर्वोऽपि राजकीयः कार्यकलापः । समाप्ति गता राजकीयकर्मचारिषु जनताया आस्था ।

कन्दर्पकेतो ! अक्षम्यस्ते एष अपराधः । तद् गच्छ, दैनिकं प्रियावियोगमसहमानः सम्प्रति एकवर्षपर्यन्तं वियोगदुःखम् अनुभव । एव एष ते अनुरूपो दण्डः ।

विश्वावसो ! अपसारय एनं मत्सकाशात् ।

स्त्रीमुखालोकनतया व्यग्राणामल्पचेतसाम् ।
ईहितानीह गच्छन्ति यौवनेव सह क्षयम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## द्वितीयं दृश्यम्

( रामगिरेः आसन्नवर्तिनि प्रदेशे विचरन्
वियोगविधुरो यक्षः विरहगीतं
गायन् प्रविशति )

यक्षः—

विरहापगा तटमुत्तरं पुनरागमिष्यति वा न वा।
अपि मानसी मम वेदना विषमा गमिष्यति वा न वा ॥
विरहापगा तटमुत्तरम्.............

नवपल्लवा विकसन्ति संविकसन्ति ते कुसुमोत्कराः।
मम भागधेयतरुः परं सरसं फलिष्यति वा न वा ॥
विरहापगा तटमुत्तरम्.............

अहह ! किं करोमि, क्व गच्छामि, कस्मै निवेदयामि, कमाश्रयामि, कुत्र मनो विनोदयामि, कथं वा जीवनं धारयामि ।

न च मे तथा आत्मनो दुखं यथा प्रियतमायाः। क्व सा स्वप्नेऽपि अननुभूत-वियोगवेदना किशलयकोमलाङ्गी बाला ! क्व चायं द्वादशमासानां हृदयदाही सुदीर्घो विकरालः प्रियवियोगकालः ।

तन्न जाने, कथमिदानीं सा जीवति, कथं शेते, कथं जागर्ति, कम् आलपति; कं वा अवलम्बते ? न चास्मिन् निर्जने विपिने कमपि सहायमवलोकयामि यो मे सन्देशलेशमपि तत्समीपे प्रापयेत् । हा ! अप्रतीकारा एषा विपद् उपनता !

परन्तु अलमिदानीं विलापेन । ममैव प्रमादस्य अयं दारुणः परिणामः तत् सहनीयमेव इदं स्वयं समुपार्जितं दुःखम् ।

तत् कुत्र इमानि वियोगदीर्घाणि दिनानि अतिवाहयामि । आं स्मृतम्, इत एव नातिदूरे रामगिरिः पर्वतः । तस्यैव तावत् सुशीतल-च्छायोदकेषु आश्रमेषु स्थित्वा कालयापनं कर्तव्यम् ।

( इतस्ततः परिभ्रम्य एकस्मिन् शिलातले
चिन्तानिमग्नः तिष्ठति )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# तृतीयं दृश्यम्

( स्थानम्—अलकापुरीस्थितं यक्षमन्दिरम् । एकस्मिन् कक्षे विरहव्यथाकुलिता म्लानवदना मलिनवसना एकवेणी एकाकिनी यक्षिणी भूमिशयने निषण्णा यक्षस्य चित्रं लिखति । लिखित्वा तत् त्रिपादिकायां निधाय देव-चित्राणामुपरि विविधपुष्पाणि समर्पयति । पुनः शयनीयतले उपविश्य चित्रं च पार्श्वे निधाय वीणां वादयन्ती विरहगीतं गायति अन्ते च मूर्छां नाटयति । )

यक्षिणी—( विरहगीतं गायति )

सुभग मयि कृपा विधेया हे
सदेयं मनसि निधेया हे ।
हेमन्तः कथमपि अतिनीतः शिशिरं सोढवती ।
विरहिदुरन्ते निशा वसन्ते कथमिव नेया हे ॥
सुभग मयि कृपा विधेया हे ।
सहकाराङ्कुर-दर्शन-प्रमुदित-कोकिल-कूजित-रम्ये ।
कोकिल-कूजित-रम्ये..........

( इति मूर्छिता भवति )

( सख्यौ ससम्भ्रमं प्रविशतः )

एका—( वीणां धारयन्ती ) प्रियसखि ! मा तावदेवं चिन्तया नलिनीदल-कोमलानि अङ्गानि दिनानुदिनं शोषयितुमर्हसि । शरीरमपि तावत् संधारय ।

द्वितीया—( शरीरं धृत्वा ) सखि ! धीरा भव । तव ईदृशैः व्यपारैर्नूनं सुदूरदेशस्थितोऽपि भर्ता त्वदुकण्ठाकलितो वेदनातिशयेन अतितरां परिभूयेत ।

तृतीया—(पञ्जरे शारिकामादाय प्रविश्य च) सखि ! पश्य इमामभिनवां शारिकाम् । न ईदृशी परिहासकुशला काचिद् शारिका कदाचित् ते दृष्टिपथं गता । तत् क्षणं तावद् एनया मनो विनोदय ।

यक्षिणी—( सारिकां निभालयति ) ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

**चतुर्थी**—( ससम्भ्रमं प्रविश्य ) सख्यः ! अलमधुना अत्र चिरमवस्थानेन । सायन्तनी वेला संवृत्ता । अस्तंगतो भगवान् अंशुमाली । तदिदानीं गिरिजा-मन्दिरे चलित्वा भगवतीं गौरीं समाराधयामः ।

( यक्षिणीं शनैरुत्थाप्य दत्तहस्तावलम्बाः सख्यः निर्गच्छन्ति )

## चतुर्थं दृश्यम्

( रामगिरेः शिलातले उपविष्टो यक्षः आषाढस्य
प्रथमदिवसे गगनमण्डले मेघं दृष्ट्वा
तदभिमुखं सतृष्णः पश्यन्
शनैः शनैः उत्तिष्ठति )

**यक्षः**—( मेघाभिमुखं निविष्टदृष्टिः अश्रूणि मार्जयन् ) अहा ! चिरादद्य लब्धं मे अवलम्बनम् । अधिगता आधारभूमिः प्राणानाम् । नीलनभोमण्डले उदीयमानमिदं श्यामल-मेघमण्डलं दृष्ट्वा उज्जीवितमिव मे पुनर्हृदयम् । तन्मन्ये, एनमेव कुटजकुसुमैः समर्च्य प्रेयसीसविधे सन्देशवहनाय सानुनयं निवेदयामि । ( कुटजकुसुमानि आनीय अञ्जलिना समर्प्य च ) स्वागतं, स्वागतं ते भुवनैक-जीवनाय कामरूपाय अभिनवनीरदाय । स्तनयित्नो ! यथा त्वं सर्वेषां संतापोप-शमनेन प्रियं सम्पादयसि तथैव ममापि प्रियवियोगविधुरस्य एकं प्रियं सम्पादयेः । न चेदं निवेदनं त्वयि निरर्थकमिति अहं सम्भावयामि । यतः—

जातं वंशे भुवनविदिते पुष्करावर्तकानां
जनामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं
याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा ॥

संतप्तानां त्वमसि शरणं तत्पयोद ! प्रियायाः
सन्देशं मे हर धनपतिक्रोध-विश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यान-स्थितहरशिरश्चन्द्रिका-धौतहर्म्या ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

ताञ्चावश्यं दिवस-गणना तत्परामेकपत्नीम्
अव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।
आशाबन्धः कुसुमसदृश प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥

मन्दं-मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधान - क्षण - परिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणी-प्रेक्षणा निम्ननाभि ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥

तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥

स्निग्धाः सख्यः कथमपि दिवा तां न मोक्ष्यन्ति तन्वीम्
एकपख्या भवति हि जगत्यङ्गनानां प्रवृत्तिः ।
स त्वं रात्रौ जलद शयनासन्न – वातायनस्थः
कान्तां सुप्ते सति परिजने वीतनिद्रामुपेयाः ॥
तस्मिन् काले जलद ! यदि सा वीतनिद्रासुखा स्यात्
अन्वास्यैनां स्तनितविमुखो याममात्र सहस्व ॥
मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्
सद्यः कण्ठच्युत—भुजलता—ग्रन्थि गाढोपगूढम् ॥
तामुत्थाप्य स्वजल-कणिका—शीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।
विद्युद्गर्भः स्तिमितनयनां त्वत्सकाशे गवाक्षे
वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
तत्कल्याणि त्वमपि नितरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपगतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥
शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेष न् मासान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणत-शरच्चन्द्रिकासु क्षपासु ॥
एतत् कृत्वा प्रियमनुचितप्रार्थनावर्तिनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।
इष्टान् देशान् जलद ! विचर प्रावृषा संभृतश्रीः
मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥

( इति सन्देशमादाय मेघो निर्गच्छति )

यक्षः—( आश्वसन् ) चिरकालानन्तरमिदानीं किञ्चिद् आश्वासनं लब्धवानस्मि । सम्प्रति प्रियतमा मे कथञ्चित् जीवितं धारयिष्यतीति सम्भावयामि । सन्देशवचनं हि रसायनविन्दुरिव वियोगिनीनां गतानपि प्राणान् पुनः परावर्तयति । मया पुनरिदानीं अस्मिन्नेवाश्रमे कथञ्चित् कालयापनं कर्तव्यम् । ( आश्रमाभिमुखं गच्छति )

पटाक्षेपः



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ९—राजपुत्राणां शिक्षा

## स्थानम्—राजभवनम्

( स्वपुत्राणां विद्याहीनतया खिन्नमना नृपतिः मन्त्रिभिः सह परामर्शं करोति। )

नृपतिः—( क्षणं चिन्तां नाटयन् ) द्वारपाल !

द्वारपालः—( उपसृत्य आज्ञां प्रतीक्षते )

नृपतिः—सचिवान् द्रष्टुमिच्छामि। तद् यथाशीघ्रं गत्वा सूचनीयास्ते।
( स्वगतम् )

वरं गर्भस्रावो वरमृतुषु नैवाभिगमनं,
वरं जातः प्रेतो वरमपि च कन्यैव जनिता।
वरं वन्ध्या भार्या वरमपि च गर्भेषु वसतिः
न चाविद्वान् रूप-द्रविण-गुण-युक्तोऽपि तनयः॥

( त्रयः सचिवाः आगच्छन्ति )

नृपतिः—आगम्यताम्, अलङ्क्रियन्तामासनानि।

प्रथमः—( नृपतेः मुखं निर्वर्ण्य ) कथमद्य महाराजाः चिन्ताकुला इव प्रतीयन्ते ?

नृपतिः—आम्, अद्य न केवलं साधारणचिन्तया प्रत्युत महत्या चिन्तया अहमाकुलीभूतोऽस्मि। दिने रात्रौ वा कदाचिदपि शान्तिं न लभे।

द्वितीयः—यद्येवम्, तर्हि वयं यथाशीघ्रं चिन्तायाः कारणं ज्ञातुमिच्छामः।

नृपतिः—ज्ञापनायैव अहं भवतः आहूतवानस्मि। महामात्याः ! मदीय-चिन्तायाः एकमात्रं कारणं मम पुत्राणां विद्याहीनता अस्ति। भवन्तो जानन्त्येव यत् मम त्रयोऽपि पुत्राः शास्त्रविमुखा विवेकरहिताः मन्दबुद्धयश्च सन्तीति। तदेतान् अतिशयसौन्दर्ययुक्तान् अपि विद्या-विहीनान् दृष्ट्वा दिवानिशं परितप्यते मे हृदयम्। राजकुमाराणां मूर्खतया इदं विशालमपि राज्यं न मे सौख्यमावहति। अथवा सत्य-मेवोक्तं नीतिशास्त्रकारैः—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

अजात मृत-मूर्खेभ्यो मृताजातौ सुतौ वरम् ।
यतस्तौ स्वल्पदुःखाय जावज्जीवं जडो दहेत् ॥

अथ च—

कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्मिकः ।
किं तया क्रियते धेन्वा या न सूते न दुग्धदा ॥

तदेतेषां यथा विद्यागमो बुद्धिप्रकाशश्च भवति तथा कोऽपि उपायः अनुचिन्त्यताम् । एवं कृते एव मदीया चिन्ता दूरीभवितुमर्हति ।

तृतीयः—महाराज ! भवतां पुत्रा युवानः संजाताः । शास्त्राणाम् अध्ययने च महान् कालः संलगति । एकं व्याकरणमेव तावद् द्वादशभिः वर्षैः समाप्यते । ततश्च अनेकवर्षैः मन्वादीनि धर्मशास्त्राणि चाणक्यादीनि अर्थशास्त्राणि तथा वात्स्यायनादीनि कामशास्त्राणि पठ्यन्ते । एवं व्याकरणज्ञानपुरस्सरं धर्मार्थकामशास्त्राणां ज्ञाने महान् समयः व्यतीतो भवति ।

प्रथमः—सत्यमिदम् । परन्तु अनिश्चितोऽयं जीवनकालः । शब्दशास्त्राणि च बहुवर्षसाध्यानि सन्ति । अतः यावता व्याकरणेन शुद्धाशुद्धपरिज्ञानं सम्यक् प्रकारेण भवति तावदेव व्याकरणं पठनीयं, तत्र अधिककालयापनस्य आवश्यकता नास्ति । उक्तं च—

अनन्तपारं किल शब्दशास्त्रं
स्वल्पं तथायुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु,
हंसैर्यथा क्षीरमिवाम्बु मध्यात् ॥

चतुर्थः—साधु उक्तं भवता । वयमपि इदमेव रोचयामः । केवलं व्याकरण-शास्त्रे एव जीवनदानस्य काचिद् आवश्यकता नास्ति ।

प्रथमः—तन्महाराज ! मह्यमेवं रोचते । अत्र एकः विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारङ्गतो निवसति तस्य अध्यापनकुशलतायाः छात्रसमाजे महतीं प्रशंसां शृणुमः । तत् महाराजाः राजकुमारान् एतान् तस्यैव हस्ते समर्पयन्तु ।

नृपतिः—यद्येवं स अध्यापनकुशलः पण्डितः तर्हि अवश्यमेव ममापि मनोरथस्य सिद्धिः संपद्येत । तत् यथाशीघ्रमाहूयतां स पण्डितराजः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

प्रथमः—द्वारपाल ! अपि जानासि विष्णुशर्माणं पण्डितम् ?

द्वारपालः—देव ! तं को नाम नागरिको न जानाति ?

प्रथमः—तर्हि त्वरितं गत्वा निवेद्यतामसौ महाराजस्यान्तिके आगन्तुम् ।

द्वारपालः—यथा आदेशो महामात्यानाम् । ( निर्गच्छन्ति )

नृपतिः—अमात्यवर्याः ! न तावत् सर्वे पण्डिता अध्यापनकलायां कुशला भवन्ति । तत्रापि विशेषतः सुकुमारमतीनां बालानाम् ।

द्वितीयः—कथं न ?

विरलास्तरलाक्षाणां बालानां शिक्षणे क्षमाः ।

तृतीयः—( हसित्वा ) महाराज ! एवं हि श्रूयते । पुरा कश्चित् पण्डितः बालशिक्षणभयात् नद्याः प्रवाहे पतित्वा प्रोवाच—काममहं प्रवाहे मरिष्यामि परं बालकान् न अध्यापयिष्यामि ।

पुरा हि पतितः प्राह प्रवाहे निष्प्रतिक्रियः ।
बालान्नाध्यापयिष्यामो विपत्स्यामो वयं वरम् ॥

( सर्वे हसन्ति )

द्वारपालः—महाराज ! समानीतो मया पण्डितवर्य्यः ।

महाराजः—तर्हि इहानीयतां महाभागः ।

( विष्णुशर्मा प्रविशति, सर्वे च उत्थाय तस्य अभिवादनं कृत्वा आसने उपवेशयन्ति )

विष्णुशर्मा—अपि कुशलं महाराजानाम् अमात्यवर्याणां च ?

महाराजः—भगवन् ! श्रीमतां कृपया सर्वथा कुशलमेव नः सर्वेषाम् । परन्तु एकं मे सुमहत् दुःखकारणं यन्निवारणाय भवन्तः समाहूता अस्माभिः ।

विष्णुशर्मा—महाराज ! यदि मया निवारणीयं स्यात् तर्हि अलं विलम्बितेन । शीघ्रं तावत् निरूपणीयम् स्वदुःखकारणम् ।

नृपतिः—मनीषिवर्य्याः ! श्रूयताम् । मम त्रयः पुत्राः सन्ति परं ते त्रयोऽपि नितान्तं विद्याविमुखा विवेकरहिता असन्मार्गगामिनश्च वर्तन्ते । तद् भवता तथा कश्चित् उपायः करणीयः येन मे त्रयोऽपि पुत्राः सुशिक्षिताः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

सुसभ्याः सदाचारिणश्च जायन्ते इति । यदि भवान् एवं करोति तर्हि अहं भवते प्रभूतं धनराशिं समर्पयिष्यामि ।

विष्णु शर्मा—महाराज ! श्रूयतां मे वचनम् । इह खलु द्विविधा अध्यापका भवन्ति । एके ज्ञानदातारः अन्ये च ज्ञानविक्रेतारः । तत्र नाहं ज्ञानविक्रेता येन भवतः द्रव्यराशिं गृहीत्वा भवत्पुत्रान् अध्यापयिष्यामि । अध्यापनं तथा अध्ययनं तु अस्माकं ब्राह्मणानां कुलक्रमागतं धार्मिकं कर्तव्यं वर्तते ।

महाराजः—विद्वद्वराः ! अद्येवं तर्हि सर्वथा अभिनन्दनीया भवन्तः । इदमेव आशास्यते भवादृशैः विद्याधनैः ब्राह्मणैः ।

विष्णुशर्मा—तदहं भवतो मनोरथपूर्तये प्रतिज्ञां करोमि यत् षण्मासाभ्यन्तरे एव अहं भवतः पुत्रान् आवश्यकं व्याकरणं, सर्वाणि नीतिशास्त्राणि; सदाचारं च शिक्षयित्वा सुयोग्यान् करिष्यामि ।

प्रथम मन्त्रीः—यद्येवं तर्हि महान् आनन्दविषयः ।

विष्णुशर्मा—अद्यतनं दिनं लिख्यताम् । यदि अद्य आरभ्य षण्मासाभ्यन्तरे भवतः पुत्रान् सुशिक्षितान् न करोमि तर्हि अहं स्वनाम-परिवर्तनं करिष्यामि ।

( सर्वे विस्मयं कुर्वन्ति )

नृपतिः—विद्वद्वराः! अलं प्रतिज्ञावचनैः । यद्येवं भवतामनुग्रहस्तर्हि सिद्ध एवास्माकं मनोरथः । तदिदानीमेव भवते निजपुत्रान् समर्पयामि । द्वारपाल ! ननु परिचारकं सूचय यत् स त्रिभिः राजकुमारैः सह इह यथा शीघ्रं समुपस्थितो भवत्विति ।

द्वारपालः—यथा आदेशो महाराजानाम् ।

विष्णुशर्मा—महाराज ! अध्यापनं नाम एका महती कला अस्ति । तत्रापि बालानां विशेषतः । यदि बालकानां अवस्थां प्रवृत्तिं रुचिं क्षमतां च निरीक्ष्य समुचितेन रूपेण मनोरंजनपूर्वकं सरलया पद्धत्या शिक्षा दीयेत तर्हि कथं न बालकाः योग्या भविष्यन्ति ? अयं तु केवलं शिक्षणपद्धतेर्दोषः यद् बालका न पठन्ति, योग्या वा न भवन्तीति । उक्तं च—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ।

( परिचारकः राजकुमारैः सह प्रविशति )

नृपतिः—(बालकान् आदाय उत्थाय च ) महामते इमे मदीयाः पुत्राः ? तदेते भवतां हस्तेषु समर्प्यन्ते । अतः परं भवन्तो यथारुचि इमान् अध्याप्य सुशिक्षितान् कुर्वन्तु इति भूयो भूयो निवेदनं वर्तते ।

विष्णुशर्मा—महाराज ! अलमिदानीं विशेषकथनेन ।
पञ्चमासान्ते भवता स्वपुत्राणां योग्यता अवलोकनीयाः ।
( पुत्रान् प्रति ) चलत राजकुमाराः आगच्छत मया सार्द्धम् ।
( राजकुमारैः परिचारकेण च सह विष्णुशर्मा निष्क्रान्तः )

नृपतिः—अमात्यवर्याः । इदानीं कथञ्चिद् आश्वासनं लब्धवानस्मि ।

प्रथमः—महाराज ! वयमपि इदानीं निश्चिन्ता जाताः । तदेतर्हि महाराजैरन्यद् आवश्यकं समनुष्ठेयम् ।

नृपतिः—एवमेतत् ।

सर्वे गच्छन्ति ।

पटाक्षेपः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# शंकराचार्यस्य विजययात्रा

## स्थानम्—प्रयागनगरम्

दण्डकमण्डलुधारिणः स्वामिशङ्कराचार्यपादा मण्डनमिश्रस्य
विजयाय तन्नगरीं माहिष्मतीं प्रति प्रस्थातुकामाः
तदीयसिद्धान्तविषये स्वगतं चिन्तयन्ति ।

शङ्कराचार्यः—

वदन्तु शास्त्राणि भजन्तु देवान्
कुर्वन्तु कर्माणि भजन्तु देवताः ।
आत्मैक्यबोधेन विना विमुक्तिर्
न सिध्यति ब्रह्मशतान्तरेऽपि ॥

इह जगतीतले बहवो विद्वज्जना यज्ञयागादिकर्मभिः तथा भजनपूजनैश्च मुक्तिर्भवति इति सिद्धान्तं मन्यन्ते । परन्तु अवैदिकः खलु एष सिद्धान्तः । वस्तुतस्तु यदा जीवात्म-परमात्मनोः एकात्मता-अभेदज्ञानं भवति तदैव मनुष्यस्य मुक्तिर्भवति । ऋते ज्ञानान्न मुक्तिः, ज्ञानेनैकेनाऽमृतत्वमानशुः, विद्ययाऽमृतमश्नुते इत्यादिवेदवचनैः अस्यैव सिद्धान्तस्य पुष्टिर्भवति ।

कर्मकाण्डस्यापि उपयोगिता वर्तते परं केवलं चित्तशुद्ध्यर्थमेव । एवमेव उपासनाया अपि उपयोगिता वर्तते परं केवलं चञ्चलस्य चेतसः एकाग्रता—सम्पादनमेव तस्या मुख्यमुद्देश्यम् । न तु कर्मकाण्डैः उपासनाभिश्च मुक्तिप्राप्तिर्भवति । मुक्तिस्तु एकमात्रं ज्ञानेनैव लब्धुं शक्यते । एष एव च वेदवेदान्तादीनामन्तिमः सिद्धान्तः अस्ति ।

कर्माणि चित्तशुद्ध्यर्थम् ऐकाग्र्यार्थमुपासना ।
मोक्षार्थं ब्रह्मविज्ञानम् इति वेदान्तनिश्चयः ॥

तथापि मोहवशात् केचन पण्डिता अपि कर्मकाण्डमेव मुक्तिसाधनं मन्यन्ते इति कियदाश्चर्यं वर्तते । श्रूयते कश्चन मण्डनमिश्रनामा महामतिः पण्डितो महता

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

ऽभिमानेन अमुं सिद्धान्तं समर्थयते अखंडितं च नानाविधं कर्मकाण्डोचित-क्रियासम्पादनपरायणस्तिष्ठति । तदेतस्य अज्ञानं दम्भं च दूरीकर्तुं तथा अद्वैत-वेदान्तस्य विजयवैजयन्तीं समन्तात् प्रतिष्ठापयितुं शास्त्रार्थकरणाय शीघ्रमेव मया तस्य गृहे गन्तव्यम् ।

तावद् गर्जन्ति शास्त्राणि जम्बुका विपिने यथा ।
न गर्जति महाशक्तिर्यावद् वेदान्तकेशरी ॥

इति निष्क्रान्तः ।

( पुनः प्रविश्य परितो विलोकयन् ) सम्प्रति समागता वयं मण्डनमिश्रनगर माहिष्मतीनाम्नि । तत् केन मार्गेण तस्य गृहे गन्तव्यम् ? न चात्र कश्चित् मार्ग-निर्देशकः प्रतिभाति । ( दूरं विलोक्य ) आः काश्चन दास्योऽ* जलानयनाय इत एव समायान्ति । तदेता एव मण्डनमिश्रस्य निवासपन्थानं पृच्छामि । ( दासीः प्रति ) अयि भोः अस्मिन् नगरे कश्चन मण्डनमिश्रनामा पण्डितो वर्तते । तं जानीथ यूयम् ?

दास्यः—स्वामिनः ! तं महापण्डितं को नाम न जानाति ? वयं तु तस्यैव महानुभावस्य दास्यः स्मः ।

शङ्कराचार्यः—( साश्चर्यम् ) यद्येवं तर्हि महत् सौभाग्यं युष्माकम् । ममापि च महत् सौविध्यं जातम् । तत् कथयत कुत्र तस्य महानुभावस्य गृहम् ? केन मार्गेण च तत्र गम्यते ?

एका दासी—स्वामिपादाः ! अनेनैव मार्गेण गम्यतां तावत् । इतो नातिदूरे तेषां महाभागानां भवनं विराजते । तस्य परिचयं तु तत्र स्थिताः कीराङ्गना एव दास्यन्ति ।

एका दासी— स्वतः प्रमाणं परतः प्रमाणं
कीराङ्गना यत्र गिरो गिरन्ति ।
द्वारस्थ–नीडान्तर–सन्निरुद्धा
अवेहि तन्मण्डनमिश्र - धाम ॥

---

* दासीनामभावे दासा अपि स्थापयितुं शक्यन्ते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

**द्वितीया दासी**—फलप्रदं कर्मं फलप्रदोऽजः
कीराङ्गना यत्र गिरो गिरन्ति।
द्वारस्थ–नीडान्तर–सन्निरुद्धा
अवेहि तन्मण्डनमिश्र-धाम॥

**तृतीया दासी**—जगद् ध्रुवं स्याज्जगदध्रुवं स्यात्
कीराङ्गना यत्र गिरो गिरन्ति।
द्वारस्थ–नीडान्तर–सन्निरुद्धा
अवेहि तन्मण्डनमिश्र-धाम॥

**शङ्कराचार्यः**—( प्रसन्नमनाः ) धन्या यूयं धन्याश्च युष्माकं पण्डितमहाभागाः यत्र कीराङ्गना अपि शास्त्रचर्चां कुर्वन्ति।

**प्रथमा दासी**—( साञ्जलिबन्धम् ) सम्प्रति अनुजानन्तु नः स्वामिपादा जलानयनाय।

**शङ्कराचार्यः**—गच्छथ यथेष्टम्। अहमपि तावत् निर्दिष्टेन पथा गच्छामि।

( सर्वे निर्गच्छन्ति )

पटाक्षेपः



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# बालकानां स्वपरिचयः

( अष्टौ बालका अनुरूपेण वेषेण अनुरूपचेष्टाभिश्च स्व-स्व-परिचय ददते )

१—अहं विश्व-जन सेवा-कर्त्ता ।
दैत्य-दुःख - भय - संकट - हर्ता ॥
२—अहं कवित्व-कला-निष्णातः ।
गद्य - पद्य - लेखे विख्यातः ॥
३—अहं शत्रुसेनायाः कालः ।
दुष्ट - जनानां कृते करालः ॥
४—अहं ब्रह्मचर्य - व्रत - धारी ।
निगमाऽगम - वेदान्त-विचारी ॥
५—अहं पूर्ण - पशुपालन - दक्षः ।
सदा दुग्ध-दधि घृतमय-भक्षः ॥
६—अहं कठिन-कृषि कर्म-प्रवीणः ।
अन्नोत्पादन - कला - धुरीणः ॥
७—अहं सर्वदा विपणि - विहारी ।
देश-विदेश - विदित व्यापारी ॥
८—सदा निष्क्रियः सततं धीरः ।
अहं केवलं भोजनवीरः ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# संस्कृत प्रेमियों को शुभ सन्देश

## यदि आप

१—हंसते खेलते हुए घर बैठे दो महीने के भीतर संस्कृत सीखना चाहते हैं,

२—संस्कृत के छोटे-छोटे मनोहर एकाङ्की नाटक खेलना चाहते हैं,

३—हर तर्ज के नये-नये संस्कृत के गीत गाना चाहते हैं,

४—संस्कृत में सन्ध्या-विनोद ( कैम्प फायर ) का आनन्द लेना चाहते हैं,

५—विवाहादि में भोजन के अवसर पर सम्बन्धियों को संस्कृत के गाली गीत सुनाना चाहते हैं,

६—संस्कृत के कवियों तथा कवयित्रियों के अवतरण ( कवि-दरबार ) का दृश्य देखना चाहते हैं,

७—श्लोकों द्वारा बच्चों का मनोविनोद करना चाहते हैं, तथा

८—धर्म, नीति, सूक्ति, सुभाषित, स्तुति प्रार्थना एवं पूजा पाठ सम्बन्धी साहित्य से अपने भवन को सुशोभित करना चाहते हैं,

तो

## सार्वभौम संस्कृत प्रचार कार्यालय

### डी० ३८।११०, हौज कटोरा, वाराणसी द्वारा

प्रकाशित साहित्य मँगाकर अपनी अभिलाषा पूर्ण करें तथा सूची-पत्र के लिये आज ही आदेश देकर कार्यालय को अनुगृहीत करें।

CC-0.Panini Kanya Maha Vidyalaya Collection.